इष्टापूर्तं बहुधा जातं जायमानं विश्वं विभर्ति भुवनस्य नाभिः।
तदेवाग्निस्तद्वायुः तत्सूर्यस्तदु चन्द्रमाः।।
तदेव शुक्रममृतं तद् ब्रह्म तदापः स प्रजापतिः।
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।
अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम्।।
स आपः प्रदुधे उभे इमे अन्तरिक्षमथो सुवः।
नैनमूर्ध्वं न तिर्यंच न मध्ये परिजग्रभत्।
न तस्येशे कश्चन तस्य नाम महद् यशः।।२।।
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति।।

अद्भ्यः सम्भूतो हिरण्यगर्भः इत्यष्टौ-एष हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखस्तिष्ठति विश्वतोमुखः। विश्वतश्चक्षुरुत विश्वतोमुखं विश्वतोहस्त उत विश्वतस्पात् संबाहुभ्यां धमति संपतत्रैर्द्यावाभू पृथिवी जनयन् देव एकः। वेनस्तत् पश्यन् विश्वाभुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम्। यस्मिन्निद ँ संचविचैकं स ओतः प्रोतश्च विभुः प्रजासु। प्रतद्वोचे अमृतं न विद्वान् गन्धर्वो नाम निहितं गुहासु।।३।।

इति अम्भस्यपारेणातुवाकः।

## ८. ब्रह्मानन्दवल्ली (सप्तमः कलशः)

ॐ सहनाववतु सह नौ भूनक्तु सहवीर्य करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।

हरिः ॐ ब्रह्मविदाप्नोति परम् तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम् परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा

विपश्चितेति। तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः ओषधीभ्योऽन्नम्, अन्नात् पुरुषः, स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव शिरः, अयं दक्षिणः पक्षः अयमुत्तरः पक्षः, अयमात्मा, इदं पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति॥१॥

**अन्नाद् वै प्रजाः प्रजायन्ते याः काश्च पृथिवीं श्रिताः।**
**अथो अन्नेनैव जीवन्ति अथैनदपि यन्त्यन्ततः॥**
**अन्नं हि भूतानां ज्येष्ठम्, तस्मात् सर्वौषधमुच्यते।**
**सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते॥**
**अन्नं हि भूतानां ज्येष्ठम्, तस्मात् सर्वौषधमुच्यते।**
**आन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्धन्ते॥**
**अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते। इति**

तस्मद्वा एतस्माद् अन्नरसमयात् अन्योऽन्यतर आत्माप्राणमयः तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम अन्वयं पुरुषविधः। तस्य प्राण एव शिरः, व्यानो दक्षिणः पक्षः अपान उत्तरः पक्षः, आकाश आत्मा, पृथिवी पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति ॥२॥

**प्राणा देवा अनुप्राणन्ति मनुष्याः पशवश्च ये।**
**प्राणो हि भूतानामायुः तस्मात् सर्वायुषमुच्यते॥**
**सर्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते।**
**प्राणो हि भूतानामायुः तस्मात् सर्वायुषमुच्यते॥ इति**

तस्यैष एव शारीर आत्मा यः पूर्वस्य तस्माद्वा एतस्माद् अन्योऽन्यतर आत्मा मनोमयः। तेनैष पूर्णः स वा एष पुरुषविध एव। तस्य पुरुषविधताम् अन्वयं पुरुषविधः। तस्य यजुरेव शिरः, ऋग् दक्षिणः पक्षः, सामोत्तरः पक्षः, आदेश आत्मा, अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥३॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान न विभेति कदाचन।। इति

तस्यैष एव शारीर आत्मा यः पूर्वस्य तस्माद्वा एतस्मान्मनो मयात् अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः स वा एष पुरुषविध एव। तस्य पुरुषविधताम् अन्वयं पुरुषविधः तस्य श्रद्धैव शिरः, ऋतं दक्षिणः पक्षः, सत्यमुत्तरं पक्षः योग आत्मा महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।।४।।

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च।
विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते।।
विज्ञानं ब्रह्म चेद् वेद तस्माच्चेन्न प्रमाद्यति।
शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते।। इति

तस्यैष एव शारीर आत्मा यः पूर्वस्य तस्माद्वा एतस्माद् विज्ञानमयाद् अन्योऽन्यतर आत्मानन्दमयः। तेनैष पूर्णः स वा एष पुरुषविध एव। तस्य पुरुषविधताम् अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।।५।।

असन्नेव स भवति असद् ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेति चेद् वेद सन्तमेन ततो विदुः।। इति
तस्यैष एव शारीर आत्मा यः पूर्वस। अथानुप्रश्नाः।
उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छति३।
आहो विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुता३ उ।।

सोऽकामयत बहुस्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत् यदिदं किञ्च तत् सृष्ट्वा तदेवानुप्राविशत्। तदनु प्रविश्य सच्चासच्चाभवत्, निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च, सत्यं चानृतं च, सत्यमभवत् यदिदं किञ्च

तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति॥६॥

**असद्वा इदमग्र आसीत् ततो वै सदजायत्।**
**तदात्मानं स्वयमकुरुत तस्मात् तत्सुकृतमुच्यते।। इति**

यद्वै तत्सुकृतम्। रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानदं याति यदा ह्येवैष एतस्मिन्नदृश्येऽनात्मेऽनिरुक्तेऽनिलयने ऽभयं प्रतिष्ठां विन्दते सोऽभयं गतो भवति यदा ह्यैवष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति॥७॥

**भीषास्माद् वातः पवते भीषोदेति सूर्यः।**
**भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः।। इति**

सैषानन्दस्य मीमांसा भवति–युवा स्यात् साधुयुवाध्यापकः आशिष्ठो द्रढिष्ठो बलिष्ठः, तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्, स एको मानुष आनन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्वाणामानन्दः स एको देवगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितृणां चिरलोकलोकानामानन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानां देवानामानन्दाः स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः श्रोत्रियस्याचाकामहतस्य। ते ये बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः श्रोत्रियस्य चाकामहतस्य। स यश्चायं पुरुषे यश्चासावादित्ये स एकः। स य एवंवित् अस्माल्लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रामति, एतं प्राणमयमात्मानमुपसंक्रामति, एतं मनोमयमात्मानमुपसंक्रामति, एतं विज्ञानमयमात्मानमुपसंक्रामति, एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति॥८॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन।। इति

एत ᳪ ह वा न तपति किमहं साधु नाकरवम् किमहं पापमकरवम् इति स एवं विद्वान् एते आत्मान ᳪ स्पृणुते, उभे हि एव एष एते आत्मान ᳪ स्पृणुते ये एवं वेद। इत्युपनिषद्।।९।।

सहनाववतु. ॐ शान्तिः शान्तिः शान्तिः।
इति ब्रह्मानन्दवल्ली।

## ९. अथ भृगुवल्ली (अष्टमः कलशः)

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यंकरवावहै। तेजस्विनावधीतमस्तु मा विद्धिषावहै। ॐ शान्तिः शान्तिः शान्तिः।

हरिः ॐ भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच अन्नं प्राणः चक्षुः श्रोत्रं मनो वाचमिति त ᳪ होवाच। यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्ति अभिसंविशन्ति तद् विजिज्ञासस्व तद् ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।।१।।

अन्नं ब्रह्मति व्यजानात्। अन्नाद्ध्यैव खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति, अन्नं प्रयन्ति अभिसंविशान्ति इति। तद् विज्ञाय पुनरेव वरुणं पितरमुपससार कधीहि भगवो ब्रह्मेति। त ᳪ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।।२।।

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि, जायन्ते, प्राणेन जातानि जीवन्ति, प्राणं प्रयन्ति अभिसंविशन्ति इति। तद् विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। त ᳪ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा।।३।।

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि, जायन्ते

मनसा जातानि जीवन्ति, मनः प्रयन्ति अभिसंविशन्ति इति। तद् विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। त ँ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥४॥

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते, विज्ञानेन जातानि जीवन्ति, विज्ञानं प्रयन्ति अभिसंविशन्ति इति। तद् विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। त ँ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति। स तपस्तप्त्वा॥५॥

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्ति अभिसंविशन्ति इति। सैषा भार्गवी वारुणी विद्या परमे व्योम्नि प्रतिष्ठिता, य एवं वेद प्रतितिष्ठति, अन्नवान्, अन्नादो भवति, महान् भवति, प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या॥६॥

अन्नं न निन्द्यात् तद् व्रतम्, प्राणो वा अन्नं शरीरमन्नादम्, प्राणे शरीरं प्रतिष्ठितम्,शरीरे प्राणः प्रतिष्ठितः तदेतदन्नमन्ने प्रतिष्ठितम्, सय एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवान् अन्नादो भवति, महान् भवति, प्रजया पशुर्भिर्ब्रह्मवर्चसेन महान् कीर्त्या॥७॥

अन्नं न परिचक्षीत तद् व्रतम्, आपो वा अन्नम् ज्योतिर्न्नादम्, अप्सु ज्योतिः प्रतिष्ठितं, ज्योतिष्वापः प्रतिष्ठिताः, तदेतदन्नमन्ने प्रतिष्ठितं, स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवान् अन्नादो भवति, महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या॥८॥

अन्नं बहु कुर्वीत तद् व्रतम्, पृथिवी वा अन्नम् आकाशो अन्नादः पृथिव्यामाकाशः प्रतिष्ठितः, आकाशे पृथिवी प्रतिष्ठिता, तदेतदन्नमन्ने प्रतिष्ठितं, स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवान् अन्नादो भवति, महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या॥९॥

न कञ्चन वसतौ प्रत्याचक्षीत तद् व्रतम्, तस्माद् यया कया च विधया

बह्वन्नंप्राप्नुयात् आराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोन्न ँ राद्धम् मुखतोस्मा अन्न ँ राध्यते, एतद्वै मध्यतोऽन्न ँ राध्यम्, मध्यतोस्मा अन्न ँ राध्यते, एतद्वा अन्ततोऽन्न ँ राद्धम्, अन्ततोस्मा अन्न ँ राध्यते य एवं वेद। क्षेम इति वाचि, योगक्षेम इति प्राणापानयोः, कर्मेति हस्तयोः, गतिरिति पादयोः, विमुक्तिरिति पायौ, इति मामुषी समज्ञा। अथ दैवी तृप्तिरिति वृष्टौ, बलमिति विद्युति, यश इति पशुषु, ज्योतिरिति नक्षत्रेषु प्रजातिरमृतानन्द इत्युपस्थे, सर्वमित्याकाशे, तत्, प्रतिष्ठेति उपासीत, प्रतिष्ठावान् भवति। तन्मह इत्युपासीत, महान् भवति, तन्मन इत्युपासीत, मानवान् भवति। तन्नम इत्युपासीत, न मन्यन्तेऽस्म कामाः तद् ब्रह्मेत्युपासीत, ब्रह्मवान् भवति। तद् ब्रह्मणः परिमर इत्युपासीत, पर्येणं म्रियन्ते द्विषन्तः सपत्नाः परि ये भ्रातृव्याः स यश्चायं पुरुषे यश्चासावादित्ये स एकः। स य एवं वेद अस्माल्लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रम्य, एतं प्राणमयमात्मानमुपसंक्रम्य, एतं मनोमयमात्मानमुपसंक्रम्य, एतं विज्ञानमयमात्मानमुपसंक्रम्य, एतमानन्दमयमात्मानमुपसंक्रम्य इमान् लोकान् कामान्नी कामरूपी अनुसंचरन एतत् साम गायन्नास्ते।

हा ३ वू हा ३ बुहा ३ बु अहमन्नमहमन्नमहमन्नम्। अहमन्नादो ३ हमन्नादो ३ हमन्नादः। अहं श्लोककृदहं श्लोककृदहं श्लोककृत्। अहमस्मि प्रवामजा ऋताऽस्य। पूर्वं देवेभ्यो अमृतस्य ना ३ भा ३ यि। यो मा ददाति स इदेवमा ३ वा ३। अहमन्नमन्नमदं तमा ३ द्मि। अहं विश्वं भुवनमभ्यभवाम् सुवर्णज्योतिः य एव वेद। इत्युपनिषद्॥१०॥

**सहनाववतु सह नौ भुनक्तु सहवीर्य करवावहै।**
**तेजस्विनावधीतमस्तु मा विद्विषावहै।**
**ॐ शान्तिः शान्तिः शान्तिः।**
**इति भृगुवल्ली समाप्ता।**

## १०. अथ नवमकलशपूजनमन्त्रः (नवमः कलशः)

मूलमन्त्रेण कर्तव्यम्।

इति कलशपूजनमन्त्राः।

## ६. अथ बगलामुखी-स्तवराजः (अर्चाक्रमीयः)

वन्दे सकलसन्देहदावपावकमीश्वरम्।
करुणावरुणावासं भक्तकल्पतरुं गुरुम्॥१॥
उल्लसत्पीतविद्योति विद्योतिततनुत्रयम्।
निगमागमसर्वस्वमीडेऽहं तन्महन्महः॥२॥
ॐ पूर्वं स्थिरमायां च बगलामुखि सर्वतः।
दुष्टानां वाचमुच्चार्य मुखं पदं तथोद्धरेत्॥३॥
स्तम्भयेति ततो जिह्वां कीलयेति समुद्धरेत्।
बुद्धिं विनाशयेति पदं स्थिरमायामनुस्मरेत्॥४॥
प्रणवं वह्निजायां चेत्येष पैताम्बरो मनुः।
पातु मां सर्वदा सर्वंनिग्रहानुग्रहक्षमः॥५॥
कण्ठं नारद ऋषिः पातु पङ्क्तिश्छन्दोऽवतान्मुखम्।
पीताम्बरा देवता तु हन्मध्यमवतान्मम्॥६॥
ह्लीं बीजं स्तनयोर्मेऽव्यात् स्वाहा शक्तिश्च दन्तयोः।
सं कीलकं तथा गुह्ये विनियोगोऽवताद् वपुः॥७॥
षड्दीर्घभाजा बीजेन न्यासोऽव्यान्मे करादिकम्।
द्विपञ्चपञ्चनन्देषुदशभिर्मन्त्रवर्णकैः॥८॥
षडङ्गकल्पना पातु षडङ्गानि ह्यनुक्रमात्।
ऐं विद्यातत्त्वं क्लीं मायातत्त्वं सौश्च शिवात्मकम्॥९॥
तत्त्वत्रयं सं बीजं च मूलं हत्कण्ठमध्यगः।
सुधाब्धौ हेमभूरूढचम्पकोद्यानमध्यतः॥१०॥

गारुडोत्पलनिर्व्यूढस्वर्णसिंहासनोपरि।
स्वर्णपङ्कजसंविष्टां त्रिनेत्रां शशिशेखराम्।।११।।
पीतालङ्कारवसनां मल्लीचन्दनशोभिताम्।
सव्याभ्यां पञ्चशाखाभ्यां वज्रं जिह्वां च विभ्रतीम्।।१२।।
मुद्गरं नागपाशं च दक्षिणाभ्यां मदालसाम्।
भक्तारिविग्रहोद्योगप्रगल्भां बगलामुखीम्।।१३।।
ध्यायमानस्य मे पातु शात्रवोद्द्वेषणे भृशम्।
भूकलादलदिक्पत्रषट्कोणं त्र्यस्रबैन्दुकम्।।१४।।
यन्त्रं पैताम्बरं पायाद पायात् सा माम् अविग्रहा।
आधारशक्तिमारभ्य ज्ञानात्मान्तास्तु शक्तयः।।१५।।
पीठाद्याः पान्तु पीठेऽत्र प्रथमं मां च रक्षतु।
शान्तिशङ्खविशेषात्मशक्तिभूतानि पान्तु माम्।।१६।।
आवाहनाद्याः पञ्चापि मुद्राश्च सुमनोजलैः।
त्रिकोणमध्यमारभ्य पूजिता बगलामुखी।।१७।।
क्रोधिनी स्तम्भिनी चापि धारिण्यश्चापि मध्यगाः।
ओजः पूषादिपीठानि कोणाग्रेषु स्थितानि वै।।१८।।
त्रिकोणबाह्यतः सिद्धनाथाद्या गुरवस्तथा।
सिद्धनाथः सिद्धानन्दनाथः सिद्धपरेष्ठि - हि।।१९।।
नाथः सिद्धः श्रीकण्ठश्च नाथः सिद्धचतुष्टयम्।
पातु मामथ षट्कोणे सुभगा भगरूपिणी।।२०।।
भगोदया च भगनिपातिनी भगमालिनी।
भगावह च मां पातु षट्कोणाग्रेषु च क्रमात्।।२१।।
त्वगात्मा शोणितात्मा च मांसात्मा मेदसात्मकः।
रूपात्मा परमात्मा च पातु मां स्थिरविग्रहा।।२२।।
अष्टपत्रेषु मूलेषु ब्राह्मी माहेश्वरी तथा।
कौमारी वैष्णवी वाराहीन्द्राणी च तथा पुनः।।२३।।

चामुण्डा च महालक्ष्मीस्तत्र मध्ये पुनर्जया।
विजया च जयाम्बा च राजिता जृम्भिणी तथा।।२४।।
स्तम्भिनी मोहिनी वश्या कर्षिणी, अथ तदग्रके।
असिताङ्गो रुरुश्चण्डः क्रौधोन्मत्तकपालिनः।
भीषणश्चापि संहार एते रक्षन्तु मां सदा।।२५।।
ततः षोडशपत्रेषु मङ्गला स्तम्भिनी तथा।
जृम्भिणी मोहिनी वश्या ज्वालासिंही वलाहका।।२६।।
भूधरा कल्मषा धात्री कन्यका कालकर्षिणी।
भान्तिका मन्दगमना भोगस्था भाविकेति च।।२७।।
पातु मामथ भूसद्म दशदिक्षु दिगीश्वराः।
इन्द्रोऽनलो यमो रक्षो वरुणो मारुतः शशी।
ईशोऽनन्तः स्वयम्भूश्च दशैते पान्तु मे वपुः।।२८।।
वज्रः शक्तिर्दण्डखड्गौ पाशाङ्कुशगदाः क्रमात्।
शूलं चक्रं सरोजं च तत्तच्छस्त्राणि पान्तु माम्।।२९।।
अथ च पूर्वादिचतुर्द्वारेषु परतः क्रमात्।
पातु विघ्नेशवटुकौ योगिनी क्षेत्रपालकः।।३०।।
गुरुत्रयं त्रिरेखासु पातु मे वपुरञ्जसा।
पुनः पीताम्बरा पातु उपचारैः प्रपूजिता।।३१।।
साङ्गावरणशक्तिश्च जयश्रीः पातु सर्वदा।
वलयं, वटुकादिभ्यो रक्षां कुर्वन्तु मे सदा।।३२।।
शक्तयः साधका वीराः पान्तु मे देवता इमाः।
इत्यर्चाक्रमतः प्रोक्तं स्तोत्रं पैताम्बरं परम्।।३३।।
यः पठेत् सकृदप्येतत् सोऽर्चाफलमवाप्नुयात्।
सर्वथा कारयेत् क्षिप्रं प्रपद्यन्ते गदातुरान्।।३४।।
राजानो राजपत्न्याश्च पौर जानपदास्तथा।
वशगास्तस्य जायन्ते सततं सेवका इव।।३५।।

गुरुकल्पाश्च विबुधा मूकतां यान्ति तेऽग्रतः।
स्थिरीभवति तद्गेहे चपलापि हरिप्रिया।।३६।।
पीताम्बराङ्गंवसनो यदि लक्षसंख्यं।
पैताम्बरं मनुममुं प्रजपेत् नरो यः।।
हैमीं सकृन्नियमवान् विधिना हरिद्रा –
मालां दधत् भवति तद्वशगा त्रिलोकी।।३७।।
भवानि बगलामुखि त्रिदशकल्पवल्लि प्रभो
कृपाजलानिधे तव चरणधूतबाधाखिलः।।
सुरासुरनरादिक – सकलभक्तभाग्यप्रदे
त्वदङ्घ्रिसरसीरुहद्वयमहं तुध्याये सदा।।३८।।
त्वमम्ब जगतां जनिस्थतिविनाशबीजं निज –
प्रकाशबहुलद्युतिर्भवति भक्तहृन्मध्यगा।
त्रयीमनुसुपूजिता हरिहरादिवृन्दारकैरनु –
क्षणमनुक्षणं मयि शिवे क्षणं वीक्ष्यताम्।।३९।।
शिवे तव तनूमहं हरिहराद्यगम्यां पराम्
निखिलतापप्रत्यूहहृद्दयाभावयुक्तां स्मरे।।
विदारय विचूर्णय ग्लपय शोषय स्तम्भय
प्रणोदय विरोधय प्रविलय प्रबद्धारीणाम्।।४०।।
क्व पार्वति कृपालसन् मयि कटाक्षपातं मनाग्
अनाकुलतया क्षणं क्षिप विपक्षसंक्षोभिणि।
यदीक्षणपथं गतः सकृदपि प्रभुः कश्चन
स्फुटं मय वशंवदो भवतु तेन पीताम्बरे।।४१।।

ॐ नमो भगवते महारुद्राय हुं फट् स्वाहा। इति भैरवमन्त्रः।

इति अथर्वणरहस्ये बगलामुख्या अर्चाक्रमस्तोत्रम्।।

इति श्रीदेवानन्दनाथशिष्यरामचन्द्रनाथविरचितायां मन्त्रसंग्रहदीपिकायां श्रीबगलास्तवराजः समाप्तः।

**ह्रीं स्त० मा. ३ श्री ल. ऐं वा ३ क्लीं ४ ह्रीं माया ५ आं पाशः ६।**
**क्रौं अंकुशः हुं वाराहं ग्लौं शक्तिः।**

इति वैदिकं प्रकरणम्।

## ७. अथ पूर्णाभिषेकप्रयोगः

### निर्वाणतन्त्रे

अभिषेकपूर्वाहे सर्वविध्नोपशान्त्यर्थं यथाशक्त्युपचारेण गुरुर्विघ्नेशं पजयेत्। गुरुस्तत्र चेन्नाधिकारी, तदाभिषिक्तं कौलं गुरुत्वेन स्वीकृत्य तेन सर्वं कारयेत्। गमिति गणेशस्य बीजम्। कृतनित्यक्रिय आसने उपविश्याचान्तोऽर्घ्यस्थापनादिभूतशुद्ध्यन्तं कर्म कृत्वा ऋष्यादिन्यासं कुर्यात्। यथा-गणक ऋषिः नीवृच्छन्दो विघ्नराजो देवता स्वकर्तव्यपूर्णाभिषेककर्मणः सर्वविघ्नशान्त्यर्थं जपे विनियोगः। शिरसि ॐ गणक ऋषये नमः, मुखे नीवृच्छन्दसे नमः हृदि विघ्नराजाय देवतायै नमः। गं हृदयाय नमः। इत्यादिनाऽङ्गन्यासकरन्यासौ विधाय, मूलेन प्राणायामत्रयं कृत्वा ध्यायेद्। यथा –

**सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं।**
**खड्गं पाशाङ्कुशेष्टान्यरुणकरलसद्वारुणीपूर्णकुम्भम्।।**
**बालेन्दूद्दीप्तमौलिं करिपतिवदनं बीजपूरार्द्रगण्डं।**
**भोगीन्द्रीबिद्धभूषं भजत गणपति रक्तवस्त्राङ्गरागम्।।**

एवं ध्यात्वा मानसोपचारेण सम्पूज्य, यन्त्रे घटे वा पीठशक्तीः पूजयेद्। यथा – एते गन्धपुष्पे ॐ तीव्रायै नमः, एवं सर्वत्र प्रणवादिनमोऽन्तेन। ॐ ज्वालिन्यै नमः, ॐ नन्दायै नमः, ॐ कामरूपिण्यै नमः, ॐ उग्रायै नमः, ॐ तेजस्वत्यै नमः, ॐ सत्यायै नमः, मध्ये ॐ विघ्ननाशिन्यै नमः,। पूर्वादिक्रमेण पूजयेत्। तत एते गन्धपुष्पे ॐ कमलासनाय नमः,। पुनर्ध्यात्वा घटादौ गन्धपुष्पे दत्त्वा,

गणेश इहागच्छेत्यावाह्य, पाद्यादिभिः पञ्चतत्त्वोपचारैश्च सम्पूज्य, चतुर्दिक्षु एते गन्धपुष्पे गणेशाय नमः। एवं गणनायकाय, गणनाथाय, गणक्रीडाय, एकदन्ताय, वक्रतुण्डाय, लम्बोदराय, गजाननाय, महादेवाय, विकटाय, धूमाभाय, विघ्ननाशाय, सर्वत्र प्रणवादिनमोऽन्तेन गन्धपुष्पाभ्यां पूजयेत्। ब्राह्म्यै, माहेश्वर्यै, कौमार्यै, वैष्णव्यै वाराह्यै, इन्द्राण्यै, नारसिंह्यै, महालक्ष्म्यै, इन्द्रादिदिग्पालेभ्यो, वज्राद्यस्त्रेभ्यो, नमः इत्यनेन पूजयित्वा, ततो यथाशक्ति मूलमन्त्र जप्त्वा, जपं समर्प्य प्रणम्य, गणपते क्षमस्वेति विसर्जयेत्। ततो दीक्षापद्धत्युक्तमधिवासनं कृत्वा ब्रह्मज्ञकुलसाधकान् पञ्चतत्त्वैर्भोजयेत्।

ततः परदिने स्नातः कृतनित्यक्रियः 'ॐ तत्सदित्युच्चार्य ॐ अद्येत्यादि अमुकमासि अमुकराशिस्थे भास्करे अमुकपक्षे अमुकतिथौ अमुकगोत्रः श्री अमुकशर्मा आजन्मज्ञानाज्ञानकृतपापक्षयकाम एतत् सतिलकाञ्चनं विष्णुर्दैवतं यथासम्भवगोत्रनाम्ने ब्राह्मणायाऽहं सम्प्रददे'। इति तिलकाञ्चनमुत्सृज्य दक्षिणां दद्यात्। ततः कौलतृप्त्यर्थं भोज्यमेकमुत्सृजेत्। ततः सूर्यायार्घ्यं दत्वा, ब्रह्मविष्णुनवग्रहान् सम्पूज्य, गौर्यादिषोडशमातृकापूजावसुधारासम्पातनायुष्यसूक्तजपाभ्युदयिकश्राद्धानि कृत्वा, गुरोः पार्श्वं गत्वा, प्रणम्य प्रार्थयेत् –

**ॐ एहि नाथ कुलाचारनलिनीकुलवल्लभ।**
**त्वत्पादाम्भोरुहच्छायां देहि मूर्ध्नि कृपानिधे।।**
**आज्ञां देहि महाभाग शुभपूर्णाभिषेचने।**
**निर्विघ्नं कर्मणः सिद्धिमुपैमि त्वत्प्रसादतः।।**

**ततो गुरुर्वदेत् –**

**ॐ शिवशक्त्याज्ञया वत्स कुरु पूर्णाभिषेचनम्।**
**मनोरथमयी सिद्धिर्जायतां शिवशासनात्।।**

इति गुरोरनुज्ञां गृहीत्वा 'ॐ अद्येत्यादि अमुकगोत्रः श्री अमुकशर्मा

आयुर्लक्ष्मीबलारोग्यप्राप्तिकामो महानिर्वाणतन्त्रीयदशमपरिच्छेदोक्तपूर्णाभिषेकमहं करिष्ये' इति संकल्प्य, ॐ यज्जाग्रत. इति, ॐ देवो व. इति वा पठेत्। ततः ॐ साधु भवानास्तामित्यादि कर्म कृत्वा, वस्त्रालङ्करणादिना सशुद्धिकारणेन च गुरुमभ्यर्च्य, 'ॐ अद्येत्यादि मत्संकल्पितमहानिर्वाणतन्त्रीयदशमपरिच्छेदोक्तपूर्णाभिषेककर्मणि अमुकगोत्रं श्री अमुकानन्दनाथं गुरुत्वेन गुरुकर्मकरणाय वा भवन्तमहं वृणे' इति शिष्ये वदति, 'ॐ वृतोऽस्मि' इति गुरुर्ब्रूयात्। ततः– 'ॐ यथाविहितं गुरुकर्म कुरु' शिष्ये वदति 'ॐ यथाज्ञानतः करवाणीति' गुरुर्ब्रूयात्। ततोगुरुर्मनोहरे गृहे सुचित्रिते चित्रध्वजपताकाचन्द्रातपाद्युपशोभिते, धूपगुग्गुलादिभिः सुवासिते, घृतप्रदीपमालाविगतान्धकारलेशे, चतुरङ्गुलोच्छ्रायसार्धहस्तमृण्मयवेदिकायां सर्वतोभद्रादिमण्डल पञ्चवर्णरजोभिर्विदध्यात्।

तत्र क्रमः- नवरात्राभिषेके सर्वतोभद्रं, सप्तरात्राभिषेके नवनाभं, पञ्चरात्राभिषेके पञ्चाब्जं त्रिरात्रैकरात्राभिषेके अष्टदलपद्मं निर्माय, तत्र घटस्थापनं दीक्षापद्धत्युक्तं कुर्यात्। ततः पञ्चतत्वादिकं संशोध्य, ठमिति चन्द्रबीजेन घटे दध्यक्षतौ दद्यात्। ॐ इति ब्रह्मबीजेन घटं स्थापयेत्। श्रीमिति लक्ष्मीबीजेन घटे सिन्दूरं दद्यात्। सविन्दुकैः क्षकाराद्यकारान्तैर्वर्णैः मूलमन्त्रेण ठकारेण घटं पूरयेत्। अथवा तीर्थतोयेन शुद्धजलेन वा पूरयेत्। नवरत्नं स्वर्णं वा घटमध्ये निःक्षिपेत्। पनसोदुम्बराश्वत्थवकुलाम्राणां पञ्चपल्लवानि ऐं इति वाग्भवबीजेन घटमुख दद्यात्। फलाक्षतयुक्तं नूतनशरावं श्रीमिति ह्रीमिति मन्त्रेण तदुपरि दद्यात्। वस्त्रयुग्मेन घटस्य ग्रीवां बध्नीयात्।

तत्र क्रमः – शाक्ते रक्तेन, शैवे वैष्णवे च श्वेतेन। ततः स्थां स्थीं ह्रीमिति श्रीमिति मन्त्रेण घटं स्थिरीकृत्य, घटश्रीपात्रयोर्मध्ये दक्षिणादितो नव पात्राणि स्थापयेत्। तत्र क्रमः – शक्तिपात्रं राजतं, गुरुपात्रं हिरणमयं, वीरपात्रं महाशङ्खम्, आत्मपात्रमपि तथा। अथवा पाषाणदारुलौहभिन्नानि

पात्राणि कुर्यात्। ततो गुरुं देवीं च कारणेन तर्पयेत्। ततः कारणपूर्णघटे स्वस्वकल्पोक्तविधिना देवतां सम्पूज्य, यथाशक्ति जप्त्वा, जपं समर्प्य बलिदानादिकं कृत्वा, स्तवकवचादिकं पठित्वा, अष्टोत्तर सहस्रं शतं हुत्वा गन्धपुष्पवस्त्रमाल्यपात्रादिभिः कुमारीशक्तिसाधकान् सम्पूज्य –

**ॐ अनुगृह्णन्तु कौला मे शिष्यं प्रति कुलव्रताः।**
**पूर्णाभिषेकसंस्कारे भवद्भिरनुमन्यताम्।।**

**इति चक्रेश्वरे पठति, ते ब्रूयुः –**

**महामायाप्रभावेण प्रभावात् परमात्मनः।**
**शिष्यो भवति पूर्णस्ते परतत्त्वपरायणः।।**

ततो गुरुः पूर्वोक्ते घटे शिष्येण देवीमर्चयित्वा श्रीं ह्लीं जप्त्वा घटं चालयेत्।

**ॐ उत्तिष्ठ ब्रह्मकलश देवताभीष्टसिद्धिद।**
**सर्वतीर्थाम्बुपूर्णेन पूरयाऽस्य मनोरथम्।।**

इति पठित्वा, सदाशिव ऋषिः, अनुष्टुप् छन्दः शिष्येष्टदेवता देवता, प्रणवो बीजम्, आयुःकीर्तिबलारोग्याद्यवाप्त्यै पूर्णाभिषेके विनियोगः।

**ॐ गुरवस्त्वाऽभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।**
**दुर्गालक्ष्मीभवान्यस्त्वामभिषिञ्चन्तु मातरः।।१।।**
**षोडशी तारिणी नित्या स्वाहा महिषमर्दिनी।**
**एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा।।२।।**
**जयदुर्गा विशालाक्षी ब्रह्माणी च सरस्वती।**
**एतास्त्वामभिषिञ्चन्तु बगला वरदा शिवा।।३।।**
**नारसिंही च वाराही वैष्णवी वनमालिनी।**
**इन्द्राणी वारुणी रौद्री त्वाऽभिषिञ्चन्तु शक्तः।।४।।**

भैरवी भद्रकाली च तुष्टिः पुष्टिरुमा क्षमा।
श्रद्धा कान्तिर्दया शान्तिरभिषिञ्चन्तु ते सदा।।५।।
महाकाली महालक्ष्मीर्महानीलसरस्वती।
उग्रचण्डा प्रचण्डाद्या अभिषिञ्चन्तु सर्वदा।।६।।
मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा।
रामो भार्गवरामस्त्वामभिषिञ्चन्तु वारिणा।।७।।
असिताङ्गो रुरुश्चण्ड क्रोधोन्मत्तक्षयङ्करः।
कपाली भीषणश्च त्वामभिषिञ्चन्तु वारिणा।।८।।
काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी।
विप्रचित्ता महोग्रा त्वामभिषिञ्चन्तु सर्वदा।।९।।
इन्द्रोऽग्निः शमनो रक्षो वरुणः पवनस्तथा।
धनदश्च तथेशानः सिञ्चन्तु त्वां दिगीश्वराः।।१०।।
रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः।
राहुः केतुः सनक्षत्रा अभिषिञ्चन्तु ते ग्रहाः।।११।।
नक्षत्रं करणं योगा वाराः पक्षौ दिनानि च।
ऋतुर्मासो हायनस्त्वामभिषिञ्चन्तु सर्वदा।।१२।।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः।
समुद्रास्त्वाऽभिषिञ्चन्तु मन्त्रपूतेन वारिणा।।१३।।
अनन्ताद्या महानागाः सुपर्णाद्याः पतत्रिणः।
तरवः कल्पवृक्षाद्याः सिञ्चन्तु त्वां दिगीश्वराः।।१४।।
पातालभूतलव्योमचारिणः क्षेमचारिणः।
पूर्णाभिषकसन्तुष्टास्त्वाऽभिषिञ्चन्तु पाथसा।।१५।।
दौर्भाग्यं दुर्यशो रोगा दौर्मनस्य तथा शुचः।
विनश्यन्त्वभिषेकेण कालीबीजेन ताडिताः।।१६।।
भूताः प्रेताः पिताचाश्च ग्रहा येऽरिष्टकारिणः।
विद्रुतास्ते विनश्यन्ति रमाबीजेन ताडिताः।।१७।।

अभिचारकृता दोषा वैरिमन्त्रोद्भवाश्च ये।
मनोवाक्कायजा दोषा विनश्यन्त्वभिषेचनात्।।१८।।
नश्यन्तु विपदः सर्वाः सम्पदः सन्तु सुस्थिराः।
अभिषेकेण पूर्णेन पूर्णाः सन्तु मनोरथाः।।१९।।

इत्येतैर्मन्त्रैः शिष्यमभिषिञ्च्य पशोर्मुखाद् यो मन्त्रो लब्धस्तं पुनः गुरुः श्रावयेत्। पूर्वोक्तनाम्ना शिष्यं संबोध्य शक्तिसाधकान् विज्ञाप्य गुरुरानन्दनाथान्तं नाम शिष्याय दद्यात्। श्रुतमन्त्रौ गुरौ इष्टदेवतां सम्पूज्य पञ्चतत्त्वैर्गुरुमर्चयेत्। ततो गोभूहिरण्यवासोयानालङ्कारणानि दक्षिणां च गुरवे दद्यात्। ततः पञ्चतत्त्वैः कौलशक्तिसाधकान् अभ्यर्च्य, गुरोश्चरणौ स्पृष्ट्वा, प्रार्थयेद्। यथा –

श्रीनाथ जगतां नाथ मन्नाथ करुणानिधे।
परामृतप्रदानेन पूरयास्मन्मनोरथम्।।

ततो गुरुः

आज्ञा मे दीयतां कौलाः प्रत्यक्षशिवरूपिणः।
सच्छिष्याय विनीताय ददामि परमामृतम्।।

ते ब्रूयुः

चक्रेश परमेशान कौलपङ्कजभास्कर।
कृतार्थं कुरु सच्छिष्यं देह्यमुष्मै कुलामृतम्।।

इति कौलाज्ञामादाय शुद्धिसहितं कारणपात्रं शिष्याय दद्यात्।
ततः स्रुवलग्नभस्मना सर्वेषां ललाटे तिलकं द्द्यात्।
ततश्चक्रं सम्पूर्णन कृत्वा यथेष्टं विहरेत्।

इति पूर्णाभिषेकः।

पूर्णाभिषेकानन्तरं तु

वामकेश्वरतन्त्रे चतुःपञ्चाशत्पटले

भैरव उवाच

मण्डपं विधिवत् कृत्वा पूजोपकरणानि च।
परमहंसेन गुरुणा पूर्णाभिषेचनं चरेत्।।
नवरत्नं जले स्थाप्य जलेनापूर्य कुम्भकम्।

द्विपञ्चाशत्पटले

नातिह्रस्वं नातिदीर्घं कलशाष्टकमुत्तमम्।।
अभिषेकात्मकमिति रत्नादिभिरलङ्कृतम्।
वस्त्रेण वेष्टयेत् कुम्भान् माल्यचन्दनपूर्वकम्।।
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च।
नदा ह्रदाः पुण्यतमा नद्यः पातालवर्त्मगाः।।
सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु सन्निधिम्।
रमाबीजेन जप्तेन पल्लवं प्रतिपादयेत्।।
कूर्चेन फलदानं स्यात् स्त्रीबीजेन स्थिराकृतिः।
सिन्दूरं वह्निबीजेन पुष्पं प्रेतेन विन्यसेत्।।
मूलेन प्रणवेनापि दूर्वां दद्याद् विचक्षणः।
हुं फट् स्वाहेति मन्त्रेण कुर्याद् दर्भेण ताडनम्।।
ईशकुम्भे यजेद् देवीं संकल्पोक्तविधानतः।
संकल्पोक्तेन विधिना यजेदावरणं ततः।।
बलिं दद्यात् प्रयत्नेन होमयेत् तन्त्रवित सुधीः।
आगमोक्तविधानेन कुर्यात् तत्र कुशकण्डिकाम्।।
त्रिमध्वाक्तेन विधिना बिल्वपत्रेण होमयेत्।
उपचारैः षोडशैस्तु पुनर्देवीं प्रपूजयेत्।।

पुनरावरणं देवि पूजयेद यत्नतः सुधीः।
ततः पूर्णाहुतिं दत्त्वा प्रकुर्यात् गुरुपूजनम्।।
सुवेद्याः पूजयेदष्टौ कुमारीश्च प्रपूजयेत्।

चतुः पंचाशत्पटले

पूजावसाने देवेशि कलशैरभिषेचयेत्।
विशेषतश्च तन्मन्त्रं वक्ष्यामि शृणु सादरात्।।
ॐ ह्रीं श्रीं ह् सौः पुत्र त्वं सर्वसिद्धीश्वरो भव।
इति पूर्वकलशेन गुरुः सिञ्चेच्छिशुं शुभम्।।
ॐ ऐं ह्रीं श्रीं क्रौं हौं हं सः पुत्र त्वं वेतालो भव।
इत्यग्निकलशेनैव गुरुः सिञ्चेच्छिशुं शुभम्।।
ॐ ह्रीं ऐं ह्रीं ह् सौः हं सः पुत्र त्वम्
अणिमादिसिद्धीश्वरो भव।
इति दक्षिणेन कलशेन गुरुः सिञ्चेच्छिशुं शुभम्।।
ॐ हुं हौं क्रीं श्रीं पुत्र त्वम् अञ्जनासिद्धीश्वरो भव।
इति नैऋतकलशेन गुरुः सिञ्चेच्छिशुं शुभम्।।
ॐ अं आं ऐं क्रौं श्रीं ह्रीं पुत्र त्वं लघिमासिद्धीश्वरो भव।
इति वारुणकलशेन गुरुः सिञ्चेच्छिशुं शुभम्।।
ॐ आं ऐं क्रीं ह्रीं पुत्र त्वं काम्यसिद्धीश्वरो भव।
इति मरुत्कलशेन गुरुः सिञ्चेच्छिशुं शुभम्।।
ॐ ऐं ओं ह्रीं पुत्र त्वं स्तम्भनादिसिद्धिश्वरो भव।
इति कुबेरकलशेन गुरुः सिञ्चेच्छिशुं शुभम्।।
ॐ हं सः ऐं ह्रीं नवनवनामकरणाभिधानपूर्वकं।
पुत्र त्वमाकर्षणसिद्धीश्वरो भव।
इतीशानकलशेन गुरुः सिञ्चेच्छिशुं शुभम्।
दक्षिणान्तं क्रियाकाण्डं कुर्यात् साधकसत्तमः।।

। इत्यभिषेकप्रकरणम्।

## १. ध्यानसहस्यम्

साधकानां परमतत्त्वप्रापंक यथा मन्त्रविज्ञानं, तथैव ध्येयवृत्तिकरणार्थं ध्यानमप्यावश्यकम्, ध्याने साधकलक्ष्यभूतं समस्तं तत्त्वं सन्निहितं भवति, तच्चिन्तनाभ्यसदार्ढ्ये सति निखिलपुरुषार्थसिद्धिः अत एवोक्तम् -

**'ध्यानं विना भवेन्मूकः सिद्धमन्त्रोऽपि साधकः।'**

तस्माद् ध्यानतत्त्वं विशदीकर्तुं प्रकरणमिदमारभ्यते। प्रोक्तं च भगवत्या बगलामुख्या मुख्यं ध्यानम् -

**सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं।**
**हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम्।।**
**हस्तैर्मुद्गरपाशवज्ररसनां संविभ्रतीं भूषणैर्व्याप्ताङ्गीं।**
**बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तयेत्।।**

विवरणम् -वैदिकप्रकरणे यत् स्तम्भनतत्वं वेदप्रामाण्येन प्रसाधितं, तदेवात्र, 'बगलामुखी' ति प्रसिद्धं शक्तितत्त्वं, तच्चिन्तनं तन्त्रशास्त्रानुमतं विव्रियते। शिवशक्त्यात्मकस्य परतत्त्वस्य प्रकाशकं शब्दतत्त्वं, तस्मादेव मन्त्राणामाविर्भावो, देवतास्वरूपव्यक्तिश्च पराख्यावाणीरूपेण योगिभिरनुभूयते। मूलाधारादुद्भवति परमात्मनो भाषेयं सर्वथा सत्यं बिभर्ति, यामत्रभवान् पतञ्जलिः सूत्रयामास "ऋतम्भरा तत्र प्रज्ञा" परा पश्यन्ती मध्यमा-वैखरीति संज्ञाभिः सैव, चतुष्प्रकाराः ता एव भगवत्या श्चत्वारो बाहवः, तेषु चत्वारि शस्त्राणि च निर्दिष्टानि तत्प्रभावद्योतकानि। प्रथमं 'गदा'। 'गद' व्यक्तायां वाचि इति निष्पन्नत्वेन सिध्यति। द्वितीयम् "स वाग्वज्रो यजमानं हिनस्ति" इति वज्ररूपं निर्दिष्टम्। पाशरूपेण तृतीयं तन्माधुर्यादिगुणान्वितं, तेन साधको महतोऽपि सम्यग्रूपेण बध्नाति। चतुर्थं जिह्वारूपं स्थूलं 'दुर्वाग्' इति श्रुतिप्रसिद्धं वरुणदेवतात्मकम्। तद् यथा - "वरुणो वा एष दुर्वागुभयतो यदक्षः" इति श्रुतेः, अक्षः, इति संकेतेन अकारमारभ्य क्षकारपर्यन्तं ग्राह्यम्, उच्चारणादिदोषदुष्टो वरुणः वृणोतेः

रूपं, तेन कुत्सितशब्दानां ग्रहणं भगवत्या विग्रहे जिह्वाग्रहणं स्पष्टतया सर्वत्र प्रायो दृश्यते, एतेन वागिन्द्रियस्य रसनस्य चोपादानं द्वयोः सम्यक् संयमोऽभिलक्ष्यते। जिह्वासंयमेनैव कामो विजीयते, वाक्संयमेन वाग्मित्वं च प्राप्यते, अनयोर्नियन्तृत्वेन सर्वे दोषा विलीयन्ते। "चत्वारि वाक्परिमितानि पदानि" इत्यादि मन्त्रेण एतद् व्याख्यातं भवति। क्वचित् पाशशब्देन लज्जाघृणादिप्रसिद्धानामपि ग्रहणं भवति, तेनापि बन्धनात्मको भावो व्याख्यातव्यः। पीतवर्णेन माङ्गलिकं रक्षात्मकं तत्त्वं गृह्यते, बीजं भगवत्या रक्षात्मकत्वं प्रसिद्धम्। यथा –

**हकारेकारपृथिवीनादबिन्दुसमन्वितम्।**
**बीजं रक्षामयं प्रोक्तं मुनिभिर्ब्रह्मवादिभिः।**

पीतवर्णं पृथिव्याः, तेन स्थैर्यं गृह्यते, तस्मादेव स्थिरमाया स्तब्धमाया स्थिरामुखीति वा कथ्यते, पीतवस्त्रेण छन्दसां ग्रहणम् छादकत्वात्, स्वर्णकुण्डलाभ्यां भोगमोक्षौ, अनेकैश्वर्यपदवाच्या रत्नपुष्पगुम्फितमाला, परामेष्ठयपदं मुकुटं, षोडशीकलारूपश्चन्द्रो मुकुटसंस्थितः नेत्रत्रयेण चन्द्राग्निसूर्या जाग्रदाद्यवस्थाभेदा वा, चतुर्थी तुरीया सर्वसाक्षिणी पराम्बा बगलेति वा, अव्याकृतमासनं छत्रं मणिद्वीपमित्यादि, सिंहवाहनेन धर्मो गृह्यते, रहस्योक्तं "दक्षिणे पुरतः सिंह" मित्यादिना एतत सर्वं लक्ष्मीकृत्य यः साधको मन्त्रार्थं भावयन् ध्यायति, स सर्वं फलं प्राप्नोति इति।

## २. इतिवृत्तम्

जगत्कारणतायाः शक्तिपदार्थेऽन्वितत्वात् ज्ञेयत्वेन ध्येयत्वेन च सम्मतत्वात् उपास्यभूता चित्कला सर्वोत्कर्षेण वर्तते। तदुपासनामाश्रित्य भगवान् ब्रह्मा वैदिकारीत्यनुसारमनुष्ठाय सृष्टिकरणसामर्थ्यमवाप। तेनैव सनकादिभ्य उपदिष्टा विद्या। सनत्कुमारे नारदाय, नारदो मुनिः सांख्यायननाम्ने परमहंसाय उपदिदेश। सांख्यायनस्तन्त्रं प्राप्तवान्,

षट्त्रिंशदात्मकैः पटलैरुपनिबबन्ध. द्वितीयोपासको भगवान् विष्णुर्यस्य वर्णनं स्वतन्त्रतन्त्रादौ सहस्रनामसु च दृश्यते, स एव भगवान् विद्याप्रचारं वैष्णवेषु अकार्षीत्। तृतीयोपासको भगवान् शिवस्तेनैव कार्तिकेयाय तारकासुरवधवेलायामुपदिष्टा विद्या। भगवान् शिव एव परशुरामाय ब्रह्मास्त्रभूतां विद्यामुपदिदेश। जामदग्न्यो रामो द्रोणाय, द्रोणाऽश्वत्थाम्ने। ब्राह्मणवेषधारिणे कर्णाय च भार्गवो रामः प्रदत्तवान्। भगवान् शिव एव भार्गवाय च्यवनमुनये प्रदत्तवान् विद्याम्। अश्विनीकुमार-योर्यज्ञाधिकारप्रदानसमये स मुनिर्दैवराजवज्रं तस्तम्भे। श्रीहनूमान् यदा सूर्यनिगरणं चक्रे, तदा पवनेन स्तम्भनं प्रादर्शि। तत् सर्वं भगवत्या महात्म्यम्। रावणपुत्रौ मेघनादो हनूमन्तं बबन्ध तद्गति चोपरुरुद्ध लङ्कायाम्। अङ्गदेन रावणसभायां स्वपाद आरोपितस्तन्नोत्थापयितुं केऽपि शेकुः। शक्तिपराहतं लक्ष्मणं रावणो न शशाकोत्थापयितुम्। द्वापरे योगेश्वरो भगवान् कृष्णः सूर्यं स्तम्भितवान् जयद्रथवधप्रसङ्गे। श्रीमद्गोविन्दपादसमाधिविघ्नकारिणीं रेवां तस्तम्भे भगवत्पादाचार्यः श्रीशङ्करः। श्रीनिम्बार्को महामुनिः आदित्यं दर्शयामास निम्बवृक्षोपरि स्वाश्रमागताय कस्मैचित् परिव्राजकायेति प्रसिद्धं वैष्णवेषु इति। अनेकेतिहासवृत्तं श्रीभगवत्याः पीताम्बरायास्तत्साधकानां च आर्यग्रन्थेषु उपलभ्यते। तत् संग्रहीतुं चेदीहा, तर्हि बहुकालसाध्यं श्रमसाध्यं च भवेत् पृथगेव महत्तरं पुस्तकं स्यात्, तस्माद् विस्तरभयाद् विरम्यते। इति शिवम्।

**द्विसहस्रमिते वर्षे वैक्रमे सिंहगे रवौ।**
**शुक्लपक्षे दिने चंद्रे भाद्रे शिवतिथौ तथा।।१।।**
**रहस्यं बगलामुख्याः कृत्वा तस्यै समर्पितम्।**
**तुष्यतां परया प्रीत्या तेनाम्बा बगला शिवा।।२।।**
**इति श्रीबगलारहस्ये प्रकरणाद्यात्मकः**

**पञ्चमः परिच्छेदः।**

**इति समाप्तः प्रथमो भागः**

# अथ परिशिष्टात्मको द्वितीयो भागः

## अथ पञ्चाङ्गप्रकरणम्

### १. अथ श्रीब्रह्मास्त्रमहाविद्यास्तोत्रम्

**श्री गणेशाय नमः**

ॐ अस्य श्रीबगलामुखीस्तोत्रस्य भगवान् नारद ऋषिः, श्री बगलामुखी देवता, त्रिष्टुप् छन्दः, मम सन्निहितानामसन्निहितानां विरोधिनां दुष्टानां वाङ्मुखबुद्धीनां स्तम्भनार्थं श्रीमहामायाबगलामुखीवर-प्रसादसिद्ध्यर्थं जपे (पाठे) विनियोगः। ॐ ह्लीं अङ्गुष्ठाभ्यां नमः, ॐ बगलामुखि तर्जनीभ्यां स्वाहा, ॐ सर्वदुष्टानां मध्यमाभ्यां वषट्, ॐ वाचं मुखं पदं स्तम्भय अनामिकाभ्यां हुम्, ॐ जिह्वां कीलय कनिष्ठिकाभ्यां वौषट्, ॐ बुद्धिं विनाशय ह्लीं ॐ स्वाहा करतलकरपृष्ठाभ्यां फट्। एवं हृदयादिषु।

**अथ ध्यानम्**

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीम्।
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम्।।
हस्तैर्मुद्गरपाशवज्ररसनाः, संबिभ्रतीं भूषणैः।
व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तयेत्।।

**जपमन्त्रः**

ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय।
जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा।।

## अथ स्तोत्रम्

मध्येसुधाब्धि मणिमण्डपरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्याविभूषिताङ्गीम्
देवीं नमामि धृतमुद्गरवैरिजिह्वाम्।।१।।

जिह्वाग्रमादाय करेण देवीं वामेन शत्रून् परिपीडयन्तीम्।
गदाभिघातेन च दक्षिणेन पीताम्बराढ्यां द्विभुजां नमामि।।२।।

त्रिशूलधारिणीमम्बां सर्वसौभाग्यदायिनीम्।
सर्वश्रृङ्गारवेशाढ्यां देवीं ध्यात्वा प्रपूजयेत्।।३।।

पीतवस्त्रां त्रिनेत्रां च द्विभुजां हाटकोज्ज्वलाम्।
शिलापर्वतहस्तां च स्मरेत् तां बगलामुखीम्।।४।।

रिपुजिह्वाग्रहां देवीं पीतपुष्पविभूषिताम्।
वैरिनिर्दलनार्थाय स्मरेत् तां बगलामुखीम्।।५।।

गम्भीरां च मदोन्मतां स्वर्णकान्तिसमप्रभाम्।
चतुर्भुजां त्रिनेत्रां च कमलासनसंस्थिताम्।।६।।

मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम्।
पीताम्बरधरां सान्द्रदृढ़पीनपयोधराम्।।७।।

हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम्।
पीतभूषणपीताङ्गीं स्वर्णसिंहासने स्थिताम्।।८।।

एवं ध्यात्वा जपेत् स्तोत्रमेकाग्रकृतमानसः।
सर्वसिद्धिमवाप्नोति मन्त्रध्यानपुरःसरम्।।९।।

आराध्या जगदम्ब दिव्यकविभिः सामाजिकैः स्तोतृभिः।
माल्यैश्चन्दकुङ्कुमैः परिमलैरभ्यर्चिता सादरात्।।
सम्यङ्न्यासिसमस्तभूतनिवहे सौभाग्यशोभाप्रदे।
श्रीमुग्धे बगले प्रसीद विमले दुःखापहे पाहि माम्।।१०।।

आनन्दकारिणी देवी रिपुस्तम्भनकारिणी।
मदनोन्मादिनी चैव प्रीतिस्तम्भनकारिणी।।११।।
महाविद्या महामाया साधकस्य फलप्रदा।
यस्याः स्मरणमात्रेण त्रैलोक्यं स्तम्भयेत् क्षणात्।।१२।।
वामे पाशाङ्कुशौ शक्तिं तस्याधस्ताद वरं शुभम्।
दक्षिणे क्रमतो वज्रं गदाजिह्वाऽभयानि च।।१३।।
बिभ्रतीं संस्मरेन्नित्यं पीतमाल्यानुलेपनाम्।
पीताम्बरधरां देवीं ब्रह्मादिसुरवन्दिताम्।।१४।।
केयूराङ्गदकुण्डलभूषां बालार्कद्युतिरञ्जितवेषाम्।
तरुणादित्यसमानप्रतिमां कौशेयांशुकबद्धनितम्बाम्।।१५।।
कल्पद्रुमतलनिहितशिलायां प्रमुदितचित्तोल्लसदलकान्ताम्।
पञ्चप्रेतनिकेतनबद्धां भक्तजनेभ्यो वितरणशीलाम्।।१६।।
एवंविधां तां बगलां ध्यात्वा मनसि साधकः।
सर्वसम्पतसमृद्ध्यर्थं स्तोत्रमेतदुदीरयेत्।।१७।।
चलत्कनककुण्डलोल्लसितचारुगण्डस्थलाम्।
लसत्कनकचम्पकद्युतिमदिन्दुबिम्बाननाम।।
गदाहतविपक्षकां कलितलोलजिह्वां चलाम्।
स्मरामि बगलामुखीं विमुखवाङ्मुखस्तम्भिनीम्।।१८।।
पीयूषोदधिमध्यचारुविलसद्रत्नोज्ज्वले मण्डपे।
तत्सिंहासनमूलपातितरिपुं प्रेतासनाध्यासिनीम्।।
स्वर्णाभां करपीडितारिरसनां भ्राम्यद्गदां विभ्रमां।
यस्त्वां ध्यायति, यान्ति तस्य विलयं सद्योऽथ सर्वापदः।।१९।।
देवि त्वच्चरणाम्बुजार्चनकृते यः पीतपुष्पाञ्जलिं।
मुद्रां वामकरे निधाय च पुनर्मन्त्री मनोज्ञाक्षरम्।।
पीताध्यानपरोऽथ कुम्भकवशाद् बीजं स्मरेत् पार्थिवं।
तस्यामित्रमुखस्य वाचि हृदये जाड्यं भवेत् तत्क्षणात्।।२०।।

मन्त्रस्ताबदलं विपक्षदलने स्तोत्रं पवित्रं च ते।
यन्त्रं वादिनियन्त्रणे त्रिजगतां जैत्रं न चित्रं हि तत्॥
मातः श्रीबगलेति नाम ललितं यस्यास्ति जन्तोर्मुखे।
तन्नामस्मरणेन संसदि मुखस्तम्भो भवेद्वादिनाम्॥२१॥
वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति।
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति॥
गर्वी खर्वति सर्वविच्च जडति त्वद्यन्त्रणायन्त्रितः।
श्रीनित्ये बगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः॥२२॥
दुष्टस्तम्भनमुग्रविघ्नशमनं दारिद्र्यविद्रावणं।
भूभृत्संनमनं च यन्मृगदृशां चेतःसमाकर्षणम्॥
सौभाग्यैकनिकेतनं समदृशां कारुण्यपूर्णेक्षणे।
शत्रोर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः॥२३॥
मातर्भञ्जय मद्विपक्षवदनं जिह्वां च संकीलय।
ब्राह्मीं यन्त्रय मुद्रयाशु धिषणामुग्रां गतिं स्तम्भय॥
शत्रूंश्चूर्णय चूर्णयाशु गदया गौराङ्गि पीताम्बरे।
विघ्नौघं बगले हर प्रणमतां कारुण्यपूर्णेक्षणे॥२४॥
मातर्भैरवि भद्रकालि विजये वाराहि विश्वाश्रये।
श्रीविद्ये समये महेशि बगले कामेशि वामे रमे॥
मातङ्गि त्रिपुरे परात्परतरे स्वर्गापवर्गप्रदे।
दासोऽहं शरणागतोऽस्मि कृपया विश्वेश्वरि त्राहि माम्॥२५॥
त्वं विद्या परमा त्रिलोकजननी विघ्नौघविध्वंसिनी।
योषाकर्षणकारिणी त्रिजगतामानन्दसंवर्धिनी॥
दुष्टोच्चाटनकारिणी पशुमनः संमोहसंदायिनी।
जिह्वाः कीलय वैरिणां विजयसे ब्रह्मास्त्रविद्या परा॥२६॥
मातर्यस्तु मनोरमं स्तवमिमं देव्याः पठेत् सादरम्।
धृत्वा यन्त्रमिदं तथैव समरे बाह्वोः करे वा गले॥

राजानो वरयोषितोऽथ करिणः सर्पा मृगेन्द्राः खलास्ते-।
वै यान्ति विमोहिता रिपुगणा लक्ष्मीः स्थिरा सर्वदा।।२७।।
अनुदिनमभिरामं साधको यस्त्रिकालं।
पठति स भुवनेऽसौ पूज्यते देववर्गैः।।
सकलममलकृत्यं तत्त्वदृष्टा च लोके।
भवति परमसिद्धा लोकमाता पराम्बा।।२८।।
पीतवस्त्रवसनामरिदेहप्रेतजासननिवेशितदेहाम्।
फुल्लपुष्परविलोचनरम्यां दैत्यजालदहनोज्ज्वलभूषाम्।।२९।।
पर्यङ्कोपरि लसद्द्विभुजां कम्बुहेमनतकुण्डललोलाम्।
वैरिनिर्दलनकारणरोषां चिन्तयामि बगलां हृदयाब्जे।।३०।।
चिन्तयामि सुभुजां शृणिहस्तां सद्भुजां च सुरवन्दितचरणाम्।
षष्ठिसप्ततिशतैर्धृतशस्त्रैर्बाहुभिः परिवृतां बगलाम्बाम्।।३१।।
चौराणां संकटे च प्रहरणसमये बन्धने वारिमध्ये।
वह्नौ वादे विवादे प्रकुपितनृपतौ दिव्यकाले निशायाम्।।
वश्ये वा स्तम्भने वा रिपुवधसमये प्राणबाधे रणे वा।
गच्छंस्तिष्ठंस्त्रिकालं स्तवपठनमिदं कारयेदाशु धीरः।।३२।।
विद्या लक्ष्मीः सर्वसौभाग्यमायुः पुत्राः सम्पद् राज्यमिष्टं च सिद्धिः।
मातः श्रेयः सर्ववश्यत्वसिद्धिः प्राप्तं सर्वं भूतले त्वत्परेण।।३३।।
गेहं नाकति गर्वितः प्रणमति स्त्रीसंगमो मोक्षति।
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति।।
मृत्युर्वैद्यति दूषणं गुणति वै यत्पादसंसेवनात्
तां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम्।।३४।।
यत् कृतं जपसंध्यानं चिन्तनं परमेश्वरि।
शत्रूणां स्तम्भनार्थाय तद् गृहाण नमोऽस्तु ते।।३५।।
ब्रह्मास्त्रमेतद् विख्यातं त्रिषु लोकेषु दुर्लभम्।
गुरुभक्ताय दातव्यं न देयं यस्य कस्यचित्।।३६।।

पीताम्बरां च द्विभुजां त्रिनेत्रां गात्रकोज्ज्वलाम्।
शिलामुद्गरहस्तां च स्मरेत् तां बगलामुखीम्।।३७।।
सिद्धिं साध्येऽवगन्तुं गुरुवरवचनेष्वार्हविश्वासभाजाम्।
स्वान्तः पद्मासनस्थां वररुचिबगलां ध्यायतां तारतारम्।।
गायत्रीपूतवाचां हरिहरमनने तत्पराणां नराणाम्।
प्रातर्मध्याह्नकाले स्तवपठनमिदं कार्यसिद्धिप्रदं स्यात्।।३८।।

इति श्रीरुद्रयामले उत्तरखण्डे
श्रीब्रह्मास्त्रमहाविद्याबगलामुखीस्त्रोत्रं
सम्पूर्णम्।

**बगलागायत्री**

ॐ ऐं बगलामुखि विद्महे ॐ क्लीं कान्तेश्वरि धीमहि।
ॐ सौः तन्न प्रह्लीं प्रचोदयात्।।

। इति गायत्री ।

## २. अथ हृदयम्

ॐ अस्य श्रीबगलामुखी हृदयमालामन्त्रस्य नारद ऋषिः, अनुष्टुप् छन्दः, श्रीबगलामुखी देवता, ह्लीं बीजं, क्लीं शक्तिः, ऐं कीलकं श्रीबगलामुखीवरप्रसादसिद्ध्यर्थे जपे विनियोगः। अथ न्यासः। ॐ नारद ऋषये नमः शिरसि, ॐ अनुष्टुप् छन्दसे नमो मुखे, ॐ श्रीबगलामुख्यै देवतायै नमः हृदये, ॐ ह्लीं बीजाय नमो गुह्ये, ॐ क्लीं शक्तये नमः पादयोः ॐ ऐं कीलकाय नमः सर्वाङ्गे। अथ कराङ्गन्यासौ। ॐ ह्लीं अङ्गुष्ठाभ्यां नमः, ॐ क्लीं तर्जनीभ्यां नमः, ॐ ऐं मध्यमाभ्यां नमः, ॐ ह्लीं अनामिकाभ्यां नमः, ॐ क्लीं कनिष्ठिकाभ्यां नमः, ॐ ऐं करतलकरपृष्ठाभ्यां नमः, ॐ ह्लीं हृदयाय नमः, ॐ क्लीं शिरसे स्वाहा,

ॐ ऐं शिखायै वषट्, ॐ ह्लीं कवचाय हुम्, ॐ क्लीं नेत्रत्रयाय वौषट्, ॐ ऐं अस्त्राय फट्। ॐ ह्लीं क्लीं ऐं इति दिग्बन्धः।

पीताम्बरां पीतमाल्यां पीताभरणभूषिताम्।
पीतकञ्जपदद्वन्द्वां बगलां चिन्तयेऽनिशम्।।

इति ध्यात्वा सम्पूज्य

"पीतशङ्खगदाहस्ते पीतचन्दनचर्चिते।
बगले मे वरं देहि शत्रुसङ्घविदारिणि।।"

इति सम्प्रार्थ्य, "ॐ ह्लीं क्लीं ऐं बगलामुख्यै गदाधारिण्यै प्रेतासनाध्यासिन्यै स्वाहा" इति मन्त्रं जपित्वा पुनः पूर्ववद् हृदयादिषडङ्गन्यासं कृत्वा स्तोत्रं पठेत्। तद् यथा –

वन्देऽहं बगलां देवीं पीतभूषणभूषिताम्।
तेजोरूपमयीं देवीं पीततेजःस्वरूपिणीम्।।१।।
गदाभ्रमणभिन्नाभ्रां भ्रुकुटीभीषणाननाम्।
भीषयन्तीं भीमशत्रून् भजे भव्यस्य भक्तिदाम्।।२।।
पूर्णचन्द्रसमानास्यां पीतगन्धानुलेपनाम्।
पीताम्बरपरीधानां पवित्रामाश्रयाम्यहम्।।३।।
पालयन्तीमनुपलं प्रसमीक्ष्याऽवनीतले।
पीताचाररतां भक्तां स्ताम्भवानीं भजाम्यहम्।।४।।
पीतपद्मपदद्वन्द्वां चम्पकारण्यरूपिणीम्।
पीतावतंसां परमां वन्दे पद्मजवन्दिताम्।।५।।

लसच्चारुसिञ्जत्सुमञ्जीरपादां चलत्स्वर्णकर्णावतंसाञ्चितास्याम्।
वलत्पीतचन्द्राननां चन्द्रवन्द्यां भजे पद्मजादीड्यसत्पादपद्माम्।।६।।
सुपीताभयामालया पूतमन्त्रं परं ते जपन्तो जयं संलभन्ते।
रणे रागरोषाप्लुतानां रिपूणां विवादे बलाद्वैरकृद्घातमातः।।७।।

भरत्पीतभास्वत्प्रभाहस्कराभां गदागञ्जितामित्रगर्वां गरिष्ठाम्।
गरीयोगुणागारगात्रां गुणाढ्यां गणेशादिगम्यां श्रये
निर्गुणाढ्याम्।।८।।

जना ये जपन्त्युग्रबीजं जगत्सु परं प्रत्यहं ते स्मरन्तः स्वरूपम्।
भवेद् वादिनां वाङ्मुखस्तम्भ आद्ये जयो जायते
जल्पतामाशु तेषाम्।।९।।

तव ध्याननिष्ठाप्रतिष्ठात्मप्रज्ञावतां पादपद्मार्चने प्रेमयुक्ताः।
प्रसन्ना नृपाः प्राकृताः पण्डिता वा पुराणादिका।
दासतुल्या भवन्ति।।१०।।

नमामस्ते मातः कनककमनीयाङ्घ्रिजलजम्
बलद्विद्युद्वर्णं घनतिमिरविध्वंसकरणम्।
भवाब्धौ मग्नात्मोत्तरणकरणं सर्वशरणम्
प्रपन्नानां मातर्जगति बगले दुःखदमनम्।।११।।
ज्वलज्ज्योत्स्नारत्नाकरमणिविषक्ताङ्कभवनम्
स्मरामस्ते धाम स्मरहरहरीन्द्रेन्दुप्रमुखैः।।
अहोरात्रं प्रातः प्रणयनवनीयं सुविशदम्
परं पीताकारं परिचितमणिद्वीपवसनम्।।१२।।
वदामस्ते मातः श्रुतिसुखकरं नाम ललितम्
लसन्मात्रावर्णं जगति बगलेति प्रचरितम्।।
चलन्तस्तिष्ठन्तो वयमुपविशन्तोऽपि शयने
भजामो यच्छ्रेयो दिवि दुरवलभ्यं दिविषदाम्।।१३।।
पदार्चायां प्रीतिः प्रतिदिनमपूर्वा प्रभवतु
यथा ते प्रासन्न्यं प्रतिपलमपेक्ष्यं प्रणमताम्।।
अनल्पं तन्मातर्भवति भृतभक्त्या भवतु नो
दिशातः सद्भक्तिं भुवि भगवतां भूरि भवदाम्।।१४।।

मम सकलरिपूणां वाङ्मुखे स्तम्भयाशु
भगवति रिपुजिह्वां कीलय प्रस्थतुल्याम्।।
व्यवसितखलबुद्धिं नाशयाऽऽशु प्रगल्भाम्
मम कुरु बहुकार्यं सत्कृपेऽम्ब प्रसीद।।१५।।
व्रजतु मम रिपूणां सद्मनि प्रेतसंस्था
करधृतगदया तान् घातयित्वाऽऽशु रोषात्।।
सधनवसनधान्यं सद्म तेषां प्रदह्य
पुनरपि बगला स्वस्थानमायातु शीघ्रम्।।१६।।
करधृतरिपु जिह्वापीडन व्यग्रहस्ताम्
पुनरपि गदया तांस्ताडयन्तीं सुतन्त्राम्।।
प्रणतसुरगणानां पालिकां पीतवस्त्रां
बहुबलबगलान्तां पीतवस्त्रां नमामः।।१७।।
हृदयवचनकायैः कुर्वतां भक्तिपुञ्जं
प्रकटति करुणार्द्रां प्रीणती जल्पतीति।।
धनमथ बहुधान्यं पुत्रपौत्रादिवृद्धिः
सकलमपि किमेभ्यो देयमेवं त्ववश्यम्।।१८।।
तव चरणसरोजं सर्वदा सेव्यमानं
द्रुहिणहरिहराद्यैर्देववृन्दैः शरण्यम्।।
मृदुलमपि शरं ते शर्म्मदं सूरिसेव्यं
वयमिह करवामो मातरेतद् विधेयम्।।१९।।
बगलाहृदयस्तोत्रमिदं भक्तिसमन्वितः।
पठेद् यो बगला तस्य प्रसन्ना पाठतो भवेत्।।२०।।
पीताध्यानपरो भक्तो यः शृणोत्यविकल्पतः।
निष्कल्मषो भवेन् मर्त्यो मृतो मोक्षमवाप्नुयात्।।२१।।
आश्विनस्य सिते पक्षे महाष्टम्यां दिवानिशम्।
यस्त्विदं पठते प्रेम्णा बगलाप्रीतिमेति सः।।२२।।

देव्यालये पठन् मर्त्यो बगलां ध्यायतीश्वरीम्।
पीतवस्त्रावृतो यस्तु तस्य नश्यन्ति शत्रवः।।२३।।
पीताचाररतो नित्यं पीतभूषां विचिन्तयन्।
बगलायाः पठेन् नित्यं हृदयस्तोत्रमुत्तमम्।।२४।।
न किंचिद्दुर्लभं तस्य दृश्यते जगतीतले।
शत्रवो ग्लानिमायान्ति तस्य दर्शनमात्रतः।।२५।।

इति श्रीसिद्धेश्वरतन्त्रे उत्तरखण्डे बगलापटले
श्रीबगलाहृदयस्तोत्रं
समाप्तम्।

## ३. अथ बगलापञ्जरस्तोत्रम्

सूत उवाच

सहस्रादित्यसंकाशं शिवं साम्बं सनातनम्।
प्रणम्य नारदः प्राह विनम्रो नतकन्धरः।।१।।

श्री नारद उवाच

भगवन् साम्ब तत्त्वज्ञ सर्वदुःखापहारक।
श्रीमत्पीताम्बरादेव्याः पञ्जरं पुण्यदं सताम्।।२।।
प्रकाशय विभो नाथ कृपां कृत्वा ममोपरि।
यद्यहं तव पादाब्जधूलिधूसरितोऽभवम्।।३।।

### श्री शिव उवाच

ॐ अस्य श्रीमद्बगलामुखीपीताम्बरापञ्जररूपस्तोत्रमन्त्रस्य भगवते नारदऋषये नमः शिरसि, अनुष्टुप छन्दसे नमो मुखे, जगद्वश्यकरी श्री पीताम्बरा बगलामुखीदेवतायै नमो हृदये, ह्लीं बीजाय नमो दक्षिणस्तने, स्वाहा शक्तये नमो वामस्तने, क्लीं कीलकाय नमो नाभौ, मम

परसैन्यमन्त्रतन्त्रयन्त्रादिकृतविपक्षक्षयार्थं श्रीमत्पीताम्बराबगलादेव्याः प्रीतये जपे विनियोगः। करसम्पुटेन मूलेन करशुद्धिः। ह्लामिति षट्दीर्घेण षडङ्गः। मूलेन व्यापकम्।

### अथ ध्यानम्

मध्येसुधाब्धि मणिमण्डितरत्नवेद्यां
सिंहासनोपरि गतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषिताङ्गीं
देवीं नमामि धृतमुद्गर वैरिजिह्वाम्।

इति ध्यात्वा, मनसा सम्पूज्य, मुद्रां प्रदर्श्य, ऋष्यादिन्यासं कृत्वा, पञ्जरं न्यसेत्।

### श्री शिव उवाच

पञ्जरं तत् प्रवक्ष्यामि देव्याः पापप्रणाशनम्।
यं प्रविश्य न बाधन्ते बाणैरपि नराः क्वचित्।।१।।
ॐ ऐं ह्लीं श्रीं श्रीमत्पीताम्बरा देवी बगला बुद्धिवर्धिनी।
पातु मामनिशं साक्षात् सहस्रार्कसमद्युतिः।।२।।
शिखादिपादपर्यन्तं वज्रपञ्जरधारिणी।
ॐ ऐं ह्लीं श्रीं श्रीमद्ब्रह्मास्त्रविद्याया पीताम्बराविभूषिता।।३।।
बगला मामवत्वत्र मूर्धंभागं महेश्वरी।
ॐ ऐं ह्लीं श्रीं कामाङ्कुशकला पातु बगला शास्त्रबोधिनी।।४।।
पीताम्बरा सहस्राक्षा ललाटं कामितार्थदा।
ॐ ऐं ह्लीं श्रीं पातु बगला पीताम्बरसुधारिणी।।५।।
कर्णयोश्चैव युगपद अतिरत्नप्रपूजिता।
ॐ ऐं ह्लीं श्रीं पातु बगला नासिकां मे गुणाकरा।।६।।

पीतपुष्पैः पीतवस्त्रैः पूजिता वेददायिनी।
ॐ ऐं ह्रीं श्रीं पातु बगला ब्रह्मविष्ण्वादिसेविता।।७।।
पीताम्बरा प्रसन्नास्या नेत्रयोर्युगपद् भ्रुवौ।
ॐ ऐं ह्रीं श्रीं पातु बगला वलिदा पीतवस्त्रधृक्।।८।।
अधरोष्ठौ तथा दन्तान् जिह्वां च मुखगां मम।
ॐ ऐं ह्रीं श्रीं पातु बगला पीताम्बरसुधारिणी।।९।।
गले हस्ते तथा वाह्वोः युगपद् बुद्धिदा सताम्।
ॐ ऐं ह्रीं श्रीं पातु बगला दिव्यस्रगनुलेपना।।१०।।
हृदये च स्तनौ नाभौ करावपि कृशोदरी।
ॐ ऐं ह्रीं श्रीं पातु बगला पीतवस्त्रघनावृता।।११।।
जङ्घायां च तथा चोर्वोर्गुल्फयोश्चातिवेगिनी।
अनुक्तमपि यत् स्थानं त्वक्केशनखलोमकम्।।१२।।
असृङ मांसं तथाऽस्थीनि सन्धयश्चापि मे परा।।

श्री शिव उवाच

इत्येतद् वरदं गोप्यं कलावपि विशेषतः।।१३।।
पञ्जरं बगलादेव्या दीर्घदारिद्र्यनाशनम्।
पञ्जरं यः पठेत् भक्त्या स विघ्नैर्नाभिभूयते।।१४।।
अव्याहतगतिश्चास्य ब्रह्मविष्णवादिसत्पुरे।
स्वर्गे मर्त्ये च पाताले नाऽरयस्तं कदाचन।।१५।।
प्रबाधन्ते नरव्याघ्रं पञ्जरस्थं कदाचन।
अतो भक्तैः कौलिकैश्च स्वरक्षार्थं सदैव हि।।१६।।
पठनीयं प्रयत्नेन सर्वाऽनर्थविनाशनम्।
महादारिद्र्ययशमनं सर्वमाङ्गल्यवर्धनम्।।१७।।
विद्याविनयसत्सौख्यं महासिद्धिकरं परम्।
इदं ब्रह्मास्त्रविद्यायाः पञ्जरं साधु गोपितम्।।१८।।

पठेत् स्मरेद् ध्यानसंस्थः स जीयान् मरणान् नरः।
यः पञ्जरं प्रविश्यैव मन्त्रं जपति वै भुवि।।१९।।
कौलकोऽकौलिको वापि व्यासवद् विचरेद् भुवि।
चन्द्रसूर्यप्रभुर्भूत्वा वसेत् कल्पायुतं दिवि।।२०।।

श्री सूत उवाच

इति कथितमशेषं श्रेयसामादिबीजं
भवशतदुरितघ्नं ध्वस्तमोहान्धकारम्।।
स्मरणमतिशयेन प्राप्तिरेवात्र मर्त्यः
यदि विशति सदा वै पञ्जरं पण्डितः स्यात्।।२१।।

इति श्री परमरहस्यातिरहस्ये पीताम्बरापञ्जरं समाप्तम्।

अथ पञ्जरन्यासस्तोत्रम्

बगला पूर्वतो रक्षेद आग्नेय्यां च गदाधरी।
पीताम्बरा दक्षिणे च स्तम्भिनी चैव नैर्ऋते।।१।।
जिह्वाकीलिन्यतो रक्षेत् पश्चिमे सर्वदा हि माम्।
वायव्ये च मदोन्मत्ता कौवेर्यां च त्रिशूलिनी।।२।।
ब्रह्मास्त्रदेवता पातु ऐशान्यां सततं मम।
संरक्षेन् मां तु सततं पाताले स्तब्धमातृका।।३।।
ऊर्ध्व रक्षेन् महादेवी जिह्वास्तम्भनकारिणी।
एवं दश दिशो रक्षेद् बगला सर्वसिद्धिदा।।४।।
एवं न्यासविधिं कृत्वा यत् किञ्चिज् जपमाचरेत्।
तस्याः संस्मरणादेव शत्रूणां स्तम्भनं भवेत्।।५।।

इति पञ्जरन्यासस्तोत्रं सम्पूर्णम्।

## (४) अथ कवचम्

### (१) बगलामुखी कवच

कैलासाचलमध्यगं पुरवहं शान्तं त्रिनेत्रं शिवम्।
वामस्था गिरिजा प्रणम्य कवचं भूतिप्रदं पृच्छति।।
देवी श्रीबगलामुखी रिपुकुलारण्याग्निरूपा च या।
तस्याश्चापविमुक्तमन्त्रसहितं प्रीत्याधुना ब्रूहि माम्।।१।।

**श्री शङ्कर उवाच**

देवि श्री भववल्लभे शृणु महामन्त्रं विभूतिप्रदम्।
देव्या वर्मयुतं समस्तसुखदं साम्राज्यदं मुक्तिदम।।
तारं रुद्रवधू विरिञ्चिमहिला विष्णुप्रिया कामयुक्।
कान्ते श्रीबगलानने मम रिपून् नाशय युग्मं त्वति।।२।।
ऐश्वर्याणि पदं च देहि युगलं शीघ्रं मनोवाञ्छितं।
कार्यं साधय युग्मयुच्छिववधूवह्निप्रियान्तो मनुः।।
कंसारेस्तनयं च बीजमपरा शक्तिश्च वाणी तथा।
कीलं श्रीमति भैरवर्षिसहितं छन्दो विराट्संयुतम्।।३।।
स्वेष्टार्थस्य परस्य वेति नितरां कार्यस्य सम्प्राप्तये।
नानाऽसाध्यमहागदस्य नियतं नाशाय वीर्याप्तये।।
ध्यात्वा श्रीबगलाननां मनुवरं जप्त्वा सहस्राख्यकम्।
दीर्घैः षट्कयुतैश्च रुद्रमहिलाबीजैर्विन्यस्याङ्गके।।४।।

**ध्यानम्**

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीम्।
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम्।।
हस्तैर्मुद्गरपाशवज्ररसनाः संबिभ्रतीं भूषणैः।
व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तयेत्।।

ॐ अस्य श्रीबगलामुखीब्रह्मास्त्रमन्त्रकवचस्य भैरव ऋषिः, विराट् छन्दः श्रीबगलामुखी देवता, क्लीं बीजम्, ऐं शक्तिः, श्रीं कीलकं, मम परस्य च मनोभिलाषितेष्टकार्यसिद्धये विनियोगः। शिरसि भैरव ऋषये नमः, मुखे विराट छन्दसे नमः। हृदि बगलामुखीदेवतायै नमः। गुह्ये क्लीं बीजाय नमः। पादयोः ऐं शक्त्ये नमः। सर्वाङ्गे श्रीं कीलकाय नमः। ॐ ह्रां अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं तर्जनीभ्यां नमः, ॐ ह्रूं मध्यमाभ्यां नमः, ॐ ह्रैं अनामिकाभ्यां नमः, ॐ ह्रौं कनिष्ठिकाभ्यां नमः, ॐ ह्रः करतलकरपृष्ठाभ्यां नमः। ॐ ह्रां हृदयाय नमः, ॐ ह्रीं शिरसे स्वाहा, ॐ ह्रूं शिखायै वषट्, ॐ ह्रै कवचाय हुम, ॐ ह्रौं नेत्रत्रयाय वौषट्, ॐ ह्रः अस्त्राय फट्।

## मन्त्रोद्धारः

ॐ ह्रीं ऐं श्रीं क्लीं श्रीबगलानने मम रिपून् नाशय नाशय, ममैश्वर्याणि देहि देहि, शीघ्रं मनोवाच्छितं कार्यं साधय साधय, ह्रीं स्वाहा।

**शिरो मे पातु ॐ ह्रीं ऐं श्रीं क्लीं पातु ललाटकम्।**
**सम्बोधनपदं पातु नेत्रे श्रीबगलानने।।१।।**
**श्रुतौ मम रिपुं पातु नासिकां नाशयद्वयम्।**
**पातु गण्डौ सदा मामैश्वर्याण्यन्तं तु मस्तकम्।।२।।**
**देहिद्वन्द्वं सदा जिह्वां पातु शीघ्रं वचो मम।**
**कण्ठदेशं मनः पातु वाञ्छितं बाहुमूलकम्।।३।।**
**कार्यं साधयद्वन्द्वं तु करौ पातु सदा मम।**
**मायायुक्ता यथा स्वाहा हृदयं पातु सर्वदा।।४।।**
**अष्टाधिकचत्वारिंशदण्डाढ्या बगलामुखी।**
**रक्षां करोतु सर्वत्र गृहेऽरण्ये सदा मम।।५।।**
**ब्रह्मास्त्राख्यो मनुः पातु सर्वाङ्गे सर्वसन्धिषु।**
**मन्त्रराजः सदा रक्षां करोतु मम सर्वदा।।६।।**

ॐ ह्लीं पातु नाभिदेशं कटिं मे बगलाऽवतु।
मुखिवर्णद्वयं पातु लिङ्गं मे मुष्कयुग्मकम्॥७॥
जानुनी सर्वदुष्टानां पातु मे वर्णपञ्चकम्।
वाचं मुखं तथा पादं षड्वर्णाः परमेश्वरी॥८॥
जङ्घायुग्मे सदा पातु बगला रिपुमोहिनी।
स्तम्भयेति पदं पृष्ठं पातु वर्णत्रय मम॥९॥
जिह्वावर्णद्वयं पातु गुल्फौ मे कीलयेति च।
पादोर्ध्वं सर्वदा पातु बुद्धिं पादतले मम॥१०॥
विनाशयपदं पातु पादाङ्गुल्योर्नखानि मे।
ह्लीं बीजं सर्वदा पातु बुद्धिन्द्रियवचांसि मे॥११॥
सर्वाङ्गं प्रणवः पातु स्वाहा रोमाणि मेऽवतु।
ब्राह्मी पूर्वदले पातु चाग्नेय्यां विष्णुवल्लभा॥१२॥
माहेशी दक्षिणे पातु चामुण्डा राक्षसेऽवतु।
कौमारी पश्चिमे पातु वायव्ये चापराजिता॥१३॥
वाराही चोत्तरे पातु नारासिंही शिवेऽवतु।
ऊर्ध्वं पातु महालक्ष्मी पाताले शारदाऽवतु॥१४॥
इत्यष्टौ शक्तयः पान्तु सायुधाश्च सवाहनाः।
राजद्वारे महादुर्गे पातु मां गणनायकः॥१५॥
श्मशाने जलमध्ये च भैरवश्च सदाऽवतु।
द्विभुजा रक्तवसनाः सर्वाभरणभूषिताः॥१६॥
योगिन्यः सर्वदा पान्तु महारण्ये सदा मम।
इति ते कथितं देवि कवचं परमाद्भुतम्॥१७॥
श्रीविश्वविजयं नाम कीर्तिश्रीविजयप्रदम्।
अपुत्रो लभते पुत्रं धीरं शूरं शतायुषम्॥१८॥
निर्धनो धनमाप्नोति कवचस्यास्य पाठतः।
जपित्वा मन्त्रराजं तु ध्यात्वा श्रीबगलामुखीम्॥१९॥

पठेदिदं हि कवचं निशायां नियमात् तु यः।
यद् यत् कामयते कामं साध्यासाध्ये महीतले।।२०।।
तत् तत् काममवाप्नोति सप्तरात्रेण शङ्करि।
गुरुं ध्यात्वा सुरां पीत्वा रात्रौ शक्तिसमन्वितः।।२१।।
कवचं यः पठेद् देवि तस्यासाध्यं न किञ्चन।
यं ध्यात्वा प्रजपेन् मन्त्रं सहस्रं कवच पठेत्।।२२।।
त्रिरात्रेण वशं याति मृत्योः तन्नात्र संशयः।
लिखित्वा प्रतिमां शत्रोः सतालेन हरिद्रया।।२३।।
लिखित्वा हृदि तन्नाम तं ध्यात्वा प्रजपेन् मनुम्।
एकविंशद्दिनं यावत् प्रत्यहं च सहस्रकम्।।२४।।
जप्त्वा पठेत् तु कवचं चतुर्विंशतिवारकम्।
संस्तम्भं जायते शत्रोर्नात्र कार्या विचारणा।।२५।।
विवादे विजयं तस्य संग्रामे जयमाप्नुयात्।
श्मशाने च भयं नास्ति कवचस्य प्रभावतः।।२६।।
नवनीतं चाभिमन्त्र्य स्त्रीणां दद्यान् महेश्वरि।
वन्ध्यायां जायते पुत्रो विद्यावलसमन्वितः।।२७।।
श्मशानाङ्गारमादाय भौमे रात्रौ शनावथ।
पादोदकेन स्पृष्ट्वा च लिखेत् लोहशलाकया।।२८।।
भूमौ शत्रोः स्वरूपं च हृदि नाम समालिखेत्।
हस्तं तद्धृदये दत्वा कवचं तिथिवारकम्।।२९।।
ध्यात्वा जपेन् मन्त्रराजं नवरात्रं प्रयत्नतः।
म्रियते ज्वरदाहेन दशमेऽह्नि न संशयः।।३०।।
भूर्जपत्रेष्विदं स्तोत्रमष्टगन्धेन संलिखेत्।
धारयेद् दक्षिणे बाहौ नारी वामभुजे तथा।।३१।।
संग्रामे जयमाप्नोति नारी पुत्रवती भवेत्।
ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति तं जनम्।।३२।।

